तत्र संस्कृतभाषानिबद्धसर्गबन्धं हयग्रीववधादि । प्राकृतभाषानिबद्धा-श्वासकबन्धं सेतुबन्धादि । अपभ्रंशभाषानिबद्धसंधिबन्धमब्धिमथनादि । ग्राम्यापभ्रंशभाषानिबद्धावस्कन्धकबन्धं भीमकाव्यादि । प्रायोग्रहणात्सं-स्कृतभाषयाप्याश्वासकबन्धो हरिप्रबन्धादौ न दुष्यति । प्रायोग्रहणादेव-रावणविजय हरिविजय-सेतुबन्धेष्वादितः समाप्तिपर्यन्तमेकमेव च्छन्दो भवतीति । गलितकानि तु तत्र कैरपि विदग्धमानिभिः क्षिप्तानीति तद्विदो भाषन्ते ।

**नायकख्यातस्ववृत्ताभाव्यर्थशंसिवक्त्रादिः सोच्छ्वासा संस्कृता गद्ययुक्ताख्यायिका ।**

— ——

**यानुवर्तनमिति** । अनेन महाकवीनां समयमुपलक्षयति । तत्र 'गुणतः प्रागु-पन्यस्य नायकं तेन विद्विषाम् । निराकरणमित्येष मार्गः प्रकृतिसुन्दरः ॥ वंश-वीर्यश्रुतादीनि वर्णयित्वा रिपोरपि । तज्जयान्नायकोत्कर्षकथनं च धिनाति नः ॥'[1] इति । (अर्थोः का) एतानि नगरवर्णनादीनि समुच्चयप्रयोज्यानि, उत विकल्प-प्रयोज्यानि । समुच्चयप्रयोज्यानीति चेत्, किरातार्जुनीयादौ किरातार्णवार्कोदय-विवाहकुमाराभ्युदयादीनामभणनम् । अर्थाविकल्पेन यथेष्टकल्पनाया मलत्वप्र-सङ्गः । तत्र अङ्कलज(?)स्योभत्रापीष्टत्वात् । यदा कथाशरीरस्य परिपूर्णाङ्गसं-भवस्तदा समुच्चयेन । यदान्यथा तदा विकल्पेनेति । तत्रापि केषांचिदङ्गानां विकल्पोऽपरेषां नियमेन प्रयोगः । यानि पुरुषार्थस्यार्थकामादेरासन्नोपकारीणि तानि नियमतः प्रयुज्यन्ते । यथा मन्त्रदूतप्रयाणादिनायकाभ्युदयादयः । यथा च शैलर्तूद्यानगमनजलक्रीडाचन्द्रोदयमधुपानरतोत्सवादयः । तानि च यदि कथाशरीरे न स्युस्तदा कथान्तरानुषङ्गेनापि कर्तव्यानीति प्रच-क्षते ॥ **वृत्तमिति** । वृत्तशब्दः सदाचार एव वर्तते । तदेव मनुराह—'न विद्यया केवलया तपसा वापि पात्रता । यस्य वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्ति-तम् ॥' इति । तदाह—**वक्त्रेति** । वक्त्रशब्देन वक्त्रप्रकरणं लक्ष्यते । तद्यथा—'अनुष्टुभि नाश्वाश्चातुर्थ्यो वक्त्रम्' इत्यादि । नजज्ञा अपरवक्त्रम् । दगोषष्ठो जोन्तो वा पूर्वेऽर्धे परे षष्ठो लार्यागाथेत्येवं छन्दोनुशासनलक्षितानि । वक्त्रं यथा

---

१. 'धिनोति' स्याद्. २. प्रमादपतितं स्याद्.

धीरप्रशान्तस्य गाम्भीर्यगुणोत्कर्षात्स्वयं स्वगुणोपवर्णनं न संभवतीत्यर्थाद्यस्यां धीरोद्धतादिना नायकेन स्वकीयवृत्तं सदाचाररूपं चेष्टितं कन्यापहारसंग्रामसमागमाभ्युदयभूषितं मित्रादि वा व्याख्यायते, अनागतार्थशंसीनि च वक्त्रापरवक्त्रार्यादीनि यत्र बध्यते, यत्र चावान्तरप्रकरणसमाप्तावुच्छ्वासा बध्यन्ते, सा संस्कृतभाषानिबद्धा अपादः पदसंतानो गद्यं तेन युक्ता । युक्तग्रहणादन्तरान्तरा प्रविरलपद्यनिबन्धेऽप्यदुष्टा आख्यायिका । यथा—हर्षचरितादि ।

**धीरशान्तनायका गद्येन पद्येन वा सर्वभाषा कथा ।**

आख्यायिकावन्न स्वचरितव्यावर्णकोऽपि तु धीरशान्तो नायकः । तस्य तु वृत्तमन्येन कविना वा यत्र वर्ण्यते, सा च काचिद्गद्यमयी । यथा—कादम्बरी । काचित्पद्यमयी । यथा—लीलावती । यावत्सर्वभाषा काचित्संस्कृतेन काचित्प्राकृतेन काचिन्मागध्या काचिच्छूरसेन्या काचित्पैशाच्या काचिदपभ्रंशेन बध्यते सा कथा ।

प्रबन्धमध्ये परप्रबोधनार्थं नलाद्युपाख्यानमिवोपाख्यानमभिनयन् पठन् गायन् यदैको ग्रन्थिकः कथयति तद्गोविन्दवदाख्यानम् ।

तिरश्चामतिरश्चां वा चेष्टाभिर्यत्र कार्यमकार्यं वा निश्चीयते तत्पञ्चतन्त्रादिवत् धूर्तविटकुट्टिनीमतमयूरमार्जारिकादिवच्च निदर्शनम् ।

---

हर्षचरिते—'निजवर्षाहितस्नेहा बहुभक्तजनान्विता । सुकाला इव जायन्ते प्रजाः पुण्येन भूभृतः ॥' अपरवक्त्रं यथा—'तरलयसि दृशं किमुत्सुकामकलुषमानसवासलालिते । अवतर कलहंसि वापिकां पुनरपि यास्यसि पङ्कजालयम् ॥' आर्या यथा—'सकलमहीभृत्कम्पकृदुत्पद्यत एक एव नृपवंशे । विपुलेऽपि पृथुप्रतिमो दन्त इव गणाधिपस्य मुखे ॥' **उपाख्यानमिति** । यदाह—'नवसावित्रीषोडशराजोपख्यानवत्प्रधावन्तः । अन्यप्रबोधनार्थं यदुपख्यानं ह्युपाख्यानम् ॥' **आख्यानमिति** । तथा चाह—'आख्यानकसंज्ञां तल्लभते यद्यभिनयन् पठन् गायन् । ग्रन्थिक एकः कथयति गोविन्दर्यदवहिते सदसि ॥' **निदर्श-**

---

१. 'वद' स्यात्.

प्रधानमधिकृत्य यत्र द्वयोर्विवादः सोऽर्धप्राकृतरचिता चेटकादिव-त्प्रवह्लिका ।

प्रेतमहाराष्ट्रभाषया क्षुद्रकथा गोरोचनानङ्गवत्यादिवन्मतल्लिका । यस्यां पुरोहितामात्यतापसादीनां प्रारब्धानिर्वाहे उपहासः सापि मतल्लिका ।

यस्यां पूर्वं वस्तु न लक्ष्यते पश्चात्तु प्रकाश्यते सा मत्स्यहसितादिव-न्मणिकुल्या ।

एकं धर्मादिपुरुषार्थमुद्दिश्य प्रकारवैचित्र्येणानन्तवृत्तान्तवर्णनप्रधाना शूद्रकादिवत्परिकथा ।

मध्यादुपान्ततो वा ग्रन्थान्तरप्रसिद्धमितिवृत्तं यस्यां वर्ण्यते सेन्दुम-त्यादिवत्खण्डकथा ।

समस्तफलान्तेतिवृत्तवर्णना समरादित्यवत्सकलकथा ।

एकतरचरिताश्रयेण प्रसिद्धकथान्तरोपनिबन्ध उपकथा

---

नमिति । तथा च—'निश्चीयते तिरश्चामतिरश्चां वापि यत्र चेष्टाभिः । कार्य-मकार्यं वा तन्निदर्शनं पञ्चतंत्त्वादि ॥ धूर्तविटकुट्टनीमतमयूरमार्जारिकादिकं लोके । कार्याकार्यनिरूपणरूपमिह निदर्शनं तदपि ॥' प्रवह्लिकेति । तथा च—'यत्र द्वयोर्विवादः प्रधानमधिकृत्य ज्ञायते सदसि । सार्धप्राकृतरचिता प्रवह्लिका चेटकप्रभृति ॥' मैन्थल्लिकेति । तथा च—'क्षुद्रकथा मैन्थल्ली प्रेतमहाराष्ट्रभाषया भवति । गोरोचनेव कार्या सानङ्गवतीव वार्कचेटीभिः ॥' सापीति । तथा च—'यस्यामुपहासः स्यात्पुरोहितामात्यतापसादीनाम् । प्रारब्धानिर्वाहे सापि हि मैन्थल्लिका भवति ॥' मणिकुल्येति । तथा च—'मणिकुल्यायां जलमिव च लक्ष्यते यत्र पूर्वतो वस्तु । पश्चात्प्रकाशते सा मणि-कुल्यामिवादिः ॥' परिकथेति । तथा च—'पर्यायेण बहूनां यत्र प्रतियोगिनां कथाः कुशलैः । श्रूयन्ते शूद्रकवजिगीषुभिः परिकथा सा तु ॥' खण्डकथे-ति । तथा च—'ग्रन्थान्तरप्रसिद्धं यस्यामितिवृत्तमुच्यते विबुधैः । मध्यादुपान्ततो वा सा खण्डकथा यथेन्दुमती ॥' सकलकथेति । चरितमित्यर्थः॥ उपकथेति । तथा च—'यत्राश्रित्य कथान्तरमतिप्रसिद्धं निबध्यते कविभिः । चरितं विचित्र-

---

१. 'तन्त्रादि' मूले. २-३-४. 'मत' स्यात्. ५. 'मत्स्यहसितादिः' मूलानुरोधात्.

लम्भाङ्किताद्भुतार्था नरवाहनदत्तादिचरितवद्बृहत्कथा ।

एते च कथाप्रभेदा एवेति न पृथग्लक्षिताः ।

**गद्यपद्यमयी साङ्का सोच्छ्वासा चम्पूः ।**

संस्कृताभ्यां गद्यपद्याभ्यां रचिता प्रायेण यान्यङ्कनानि स्वनाम्ना परनाम्ना वा कविः करोति तैर्युक्ता उच्छ्वासनिबद्धा चम्पूः । यथा वासवदत्ता दमयन्ती वा ।

**अनिबद्धं मुक्तकादि ।**

मुक्तक-संदानितक-विशेषक-कलापक-कुलक-पर्याकोश-प्रभृत्यनिबद्धम् ।

एषां लक्षणमाह—

**एकद्वित्रिचतुश्छन्दोभिर्मुक्तकसंदानितकविशेषककलापकानि ।**

एकेन च्छन्दसा वाक्यार्थसमाप्तौ मुक्तकम् । यथा अमरुकस्य शृङ्गारशते रसस्यन्दिनो मुक्तकाः । द्वाभ्यां संदानितकम् । त्रिभिर्विशेषकम् । चतुर्भिः कलापकम् । एतानि च विशेषानभिधानात्सर्वभाषाभिर्भवन्ति ।

**पञ्चादिभिश्चतुर्दशान्तैः कुलकम् ।**

छन्दोभिरिति वर्तते । मुक्तकानामेव प्रघट्टकोपनिबन्धः । अवान्तरवाक्यसमाप्तावपि वसन्ताद्येकवर्णनीयोद्देशेन मुक्तकानामुपनिबन्धः । पर्यासा कोशेषु प्रचुरं दृश्यते । स्वपरकृतसूक्तिसमुच्चयः कोशः । यथा सप्तशतकादिः । एकप्रघट्टके एककविकृतः सूक्तिसमुदायो वृन्दावनमेघदूतादिः संघातः । विप्रकीर्णवृत्तानामेकत्र संधानं यदुवंशदिलीपवंशादिवत्संहिता । एवमनन्तोऽनिबद्धगणः स आदिग्रहणेन गृह्यते । इह च सत्संधित्वं शब्दार्थवैचित्र्ययोगश्च महाकाव्यवदाख्यायिकाकथाचम्पूष्वपि द्रष्टव्यः ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामलंकारचूडामणिसंज्ञस्वोपज्ञकाव्यानुशासनवृत्तावष्टमोऽध्यायः समाप्तः ।

---

मन्यत्सोपकथा चित्रलेखादिः ॥' बृहत्कथेति । तथा च—'लम्भाङ्किताद्भुतार्था पिशाचभाषामयी महाविषया । नरवाहनदत्तादेश्चरितमिव बृहत्कथा भवति ॥'

इत्याचार्यश्रीहेमचन्द्रविरचिते विवेकेऽष्टमोऽध्यायः ।

**समाप्तोऽयं ग्रन्थः ।**

# अकाराद्यनुक्रमेण सटीककाव्यानुशासनोदाहरणानुक्रमणिका[1]।



१. अस्यामनुक्रमणिकायां यत्र यत्र पङ्क्तौ '(टी.) एतच्चिह्नमुपलभ्यते, तदुदाहरणं टीकाणामन्वेषणीयम्. यत्र च पङ्क्तौ चिह्नं नास्ति, तदुदाहरणं मूले मृग्यम्.

पृष्ठाङ्काः

पृष्ठाङ्काः



पृष्ठाङ्काः